स्तर्हि पीतः शङ्ख इत्यादौ स न सिद्धस्तत्र तयोरभावादिति चेन्न । अगृहीतविवेकयोः प्राप्तसमीचीनसंसर्गज्ञानसारूप्यत्वे ग्रहणयोरेव व्यवहारसंपादकत्वोपपत्तेः । वेदनीयं नयनरश्मिविवर्तिनः पित्तद्रव्यस्य पीतिमा दोषवशाद्द्रव्यरहितो गृह्यते । शङ्खोऽप्यकलितशुक्लगुणः स्वरूपतो गृह्यते । तदनयोर्गुणगुणिनोः संसर्गयोग्ययोरसंसर्गाग्रहसारूप्यात्पीततपनीयपिण्डप्रत्ययवैलक्षण्याद्व्यवहार उपपद्यते । यथोक्तम्—

पीतशङ्खावबोधे हि पित्तस्येन्द्रियवर्तिनः ।
पीतिमा गृह्यते द्रव्यरहितो दोषतस्तथा ॥
शङ्खस्येन्द्रियदोषेण शुक्लिमा न च गृह्यते ।
केवलं द्रव्यमात्रं तु प्रथते रूपवर्जितम् ॥
गुणे द्रव्यव्यपेक्षे च द्रव्ये च गुणकाङ्क्षिणि ।
भासमाने तयोर्बुद्धिरसंबुद्धं न बुध्यते ॥
सत्यं पित्तावभासेन समे भाते मती इमे ।
व्यवहारोऽपि तत्तुल्य एवमत्रापि युज्यते ॥

नन्विदं रजतमिति भ्रान्तिज्ञानानभ्युपगमे रजतप्रसक्तेरसत्वान्नेदं रजतमिति निषेधः कथं कलधौताभावं बोधयतीति चेन्नैष दोषः । भेदाग्रहप्रसञ्जितस्य शुक्तौ रजतव्यवहारस्य निषेधस्वीकारेण कल्पनालाघवसद्भावात् । तदुक्तं पञ्चिकाप्रकरणे—

मिथ्याभावोऽपि तत्तुल्यव्यवहारप्रवर्तनात् ।
रजतव्यवहारांशे विसंवादयतो नरान् ॥
बाधकप्रत्ययस्यापि बाधकत्वमतो मतम् ।
प्रसज्यमानरजतव्यवहारनिवारणात् ॥ इति ।

तदनेन प्राचीनयोर्ज्ञानयोः सत्यत्वे कथं भ्रमत्वप्रसिद्धिरिति शङ्का पराकृता । अयथाव्यवहारप्रवर्तकत्वेन तदुपपत्तेः । किं च नेदं रजतमिति बाधकावबोधो नाभावमवगाहते । भावव्यतिरेकेणाभावस्य दुर्ग्रहणत्वात् । यद्येवमङ्ग नास्तीतिप्रत्ययस्य किमालम्बनमपरथा माहाभानिकपक्षानुप्रवेश इति चेन्मैवं भाषिष्ठाः । अभावस्य धर्मिप्रतियोगिनिरूपणाधीननिरूप्यत्वेनावश्याभ्युपगमनीये दृश्ये प्रतियोगिनि स्मर्य-

---

१ ख. °संदपारक° । २ ख. °त्तः । विनीय न° । ३ ख. गुणितोऽसं° । ४ गं गृहसा° । ५ ख. °नः पित्तमा° । ६ ख. प्राथिते । ७ ख. °व्यस्य पक्षे । ८ ख. °ङ्क्षिणे । भा° । ९ ख. °त्यपि:ताव° । १० ख. °रव° । ११ ख. रसितं व्य° । १२ ख. °म् । आस° ।

माणे वाऽधिकरणमात्रबुद्धेरेव नास्तीति व्यवहारोपपत्तावतिरिक्ताभाव-कल्पनायां प्रमाणाभावात्। तदुक्तमसृतकलायाम्—

अत्रोच्यते द्वयी संविद्वस्तुनो भूतशालिनः।
एका सा स्पष्टविषया तन्मात्रविषया परा॥
तन्मात्रविषया वाऽपि द्वयी साऽथ निगद्यते।
प्रतियोगिनि दृश्ये च घटादिप्रतियोगिनः॥ इति।

अत एव च प्राभाकरमतानुसारिभिः प्रमाणपारायणे प्रत्यक्षादीनि पञ्चैव प्रमाणानि प्रपञ्चितानि। नन्वेवमभावस्याभावे नकारस्य वैयर्थ्यमापद्येत, अनुशासनविरोधश्चाऽऽपतेदिति चेत्तदेतद्वार्तम्। एकोनपञ्चाशद्वर्णानां मध्ये कस्यापि वर्णस्याभावार्थत्वादर्शनेन वर्णस्य सतो नकारस्य तदर्थत्वानुपपत्तेः। न चैवमनुशासनविरोधः। तदन्यतदभावतद्विरुद्धेष्वर्थेष्वनुशासनस्यैवमर्थः स्यात्। तथा हि चेतनानां मध्ये कश्च न कस्यचिच्छत्रुः कश्च न कस्यचिन्मित्रं कश्च न कस्यचिदुदासीनस्तथैवाचेतानानामपि। तदन्यपदेन तदुदासीनो नकारार्थः। विरुद्धपदेन शत्रुर्नकारार्थस्तदभावपदेन मित्रं नकारार्थः। तथा चाब्राह्मणपद एवैतत्त्रयं प्रतीयते शूद्र इत्युदासीनो यवन इति शत्रुः क्षत्रिय इति मित्रमेवं सर्वत्र नञ्प्रयोगस्थले द्रष्टव्यमिति न कश्चिदभावो भावव्यतिरिक्तः संभवति। तस्मादुक्तया रीत्या भ्रमबाधप्रसिध्द्या विवादाध्यासिताः प्रत्यया यथार्थाः प्रत्ययत्वाद्दण्डीति प्रत्ययवदिति सिद्धम्।

तदपरे न क्षमन्ते। इह खलु निखिलप्रेक्षावान्समीहिततत्साधनयोरन्यतरप्रवेदने प्रवर्तते। न च रजतमर्थयमानस्य शुक्तिकाशकलज्ञानं तद्रूपमनुभवितुं प्रभवति। शुक्तिकाशकलस्य समीहिततत्साधनयोरन्यतरभावाभावात्। नापि रजतस्मरणं पुरोवर्तिनि प्रवृत्तिकारणम्। तस्यानुभवपारतन्त्र्यतयाऽनुभवदेश एव प्रवर्तकत्वात्। नापि भेदाग्रहो व्यवहारकारणम्। ग्रहणनिबन्धनत्वाच्चेतनव्यवहारस्य। ननु न वयमेकैकस्य कारणत्वं ब्रूमहे येनैवमुपालभ्येमहि। किंत्वगृहीतविवेकस्य ज्ञानद्वयस्य प्राप्तसमीचीनपुरःस्थितरजतज्ञानसारूप्यस्येत्यनुक्तोपालम्भोऽयमिति चेत्तदप्ययुक्तम्। विकल्पासहत्वात्। तथा हि—समीचीनरजतावभाससारूप्यं भासमानं प्रवर्तकं सत्तामात्रेण वा। आद्ये विकल्पे भेदाग्रहापरपर्यायस्य सारूप्यस्य समीचीनसंनिभे इमे ज्ञाने इति विशेषाकारेण गृह्यमाणस्य

१ ख. °व्यति°। २ ख. 'सिद्धत्वाद्दिवा°। ३ ख. °भवे पा°। ४ ख. 'ग्रहे व्य°।

प्रवृत्तिकारणत्वं किं वा तयोरेव स्वरूपतो विषयतश्च मिथो भेदाग्रहो विद्यत इति सामान्याकारेण गृह्यमाणस्य सारूप्यस्य । नाऽऽद्यः । समीचीनज्ञानवत्तत्संनिभज्ञानस्य तदुचितव्यवहारप्रवर्तकत्वानुपपत्तेः । न खलु गोसंनिभो गवय इत्यवभासो गवार्थिनं गवये प्रवर्तयति । न द्वितीयः । व्याहतत्वात् । न खल्वनाकलितभेदस्तयोरिति भेदग्रह इति च प्रतिपत्तुं[1] भवति । अतः परिशेषात्सत्तामात्रेण भेदाग्रहरूपस्य सारूप्यस्य व्यवहारकारणत्वमङ्गीकर्तव्यम् । एवमेवास्त्विति चेत्तर्हीदमिह संप्रधार्यम्[2] । किमयं भेदाग्रहः समारोपोत्पादनक्रमेण व्यवहारकारणमस्तु । उतानुत्पादितारोप एव स्वयमिति । न च द्वितीयः पक्ष एव श्रेयांस्तावतैव व्यवहारोत्पत्तावारोपस्य गौरवदोषदुष्टत्वादिति मन्तव्यम् । विशिष्टव्यवहारस्य विशिष्टज्ञानपूर्वकत्वनियमेनाज्ञानपूर्वकत्वानुपपत्तेः । नन्वयं व्यवहारो नाज्ञानपूर्वक इत्यनाकलितपराभिसंधिः स्वासिद्धान्तसिद्धार्थाद्यदि[3] कश्चिच्छशङ्केत स प्रतिवक्तव्यः । शुक्तिकाविषयस्य ग्रहणस्यासमीहितविषयत्वेन रजतार्थप्रवृत्तिहेतुत्वासंभवादन्वयव्यतिरेकाभ्यां रजतज्ञानस्य समीहितविषयत्वेन प्रवृत्तिहेतुत्वसंभवाच्चेदमर्थाभिसंभिन्नरजतस्मरणस्य ग्रहविविक्तस्यापि कारणत्वं वक्तव्यं तच्च वक्तुं न शक्यते । जानाति, इच्छति, ततः प्रवर्तत इति न्यायेन ज्ञानेच्छाप्रवृत्तीनां समानविषयत्वेन भाव्यम् । तथा चेदंकारास्पदं मुख्यरजतार्थिनस्तदिच्छानिबन्धनम्[4] । अन्यथाऽन्यदिच्छन्नन्यद्व्यवहरतीति[5] व्याहन्येत । तथा च यदीदंकारास्पदं रजतभा[6]सगोचरतां नाऽऽचरेत्कथं रजतार्थी तदिच्छेत् । यद्यरजतत्वाग्रहणादिति ब्रूयात्, रजतत्वाग्रहात्[7]कस्मादयं नोपेक्षेतेति । युगपत्तद्भव[8]भेदाग्रहाभेदाग्रहनिबन्धनाभ्यामुपादानोपेक्षाभ्यां पुरतः पृष्ठतश्चाकृष्यमाणः पुरुषो लोलायमानतया रूप्यारोपमन्तरेणोपादानपक्ष एव न व्यवस्थाप्यत इत्यनिच्छताऽप्यच्छमतिना समारोपः समाश्रयणीयः[9] । यथाह । भेदाग्रहादिदंकारास्पदे रजतत्वमारोप्य तज्जातीयस्योपकारहेतुभावमनुस्मृत्य तज्जातीयत्वेनास्यापि तदनुमाय तदर्थी प्रवर्तत इति प्रथमः पक्षः प्रशस्यः । न च तटस्थरजतस्मरणपक्षेऽपि धर्महेत्वोर्गृहीतत्वे[10] नायं मार्गः समान[11] इति वाच्यम् ।

---

१ ख. °तिवत्तुं । २ ख. °प्रसार्यं । ३ ख. °द्धान्दुः क° । ४ ख. मुखर° । ५ ख. °दिच्छेदन्य । ६ ख. °तावभा° । ७ ख. °ग्रहणात्क° । ८ ख. °गतद्ध । ९ ख. °णीयस्तथा हि भे° । १० ख. °हे त्वागृही° । १३ ख. °नथिति ।

रजतत्वस्य हेतोः पक्षधर्मत्वाभावात् । न च पक्षधर्मताऽभावेऽपि व्याप्तिबलाद्गमकत्वं शङ्क्यम्[1] । व्याप्तिपक्षधर्मतावल्लिङ्गस्यैव गमकत्वाङ्गीकारात् । तदाहुः शबरस्वामिनः–ज्ञातसंबन्धस्यैव पुंसो लिङ्गविशिष्टधर्मैकदेशदर्शनाल्लिङ्गिविशिष्टधर्मिकदेशबुद्धिरनुमानमिति । आचार्योऽप्यवोचत्–

> स[2] एव चोभयात्मा यो गम्ये गमक इष्यते ।
> असिद्धेनैकदेशेन गम्यासिद्धेर्न बोधकः ॥ इति ।

ननु भवत्पक्षेऽपि पुरःस्थितस्येदमर्थस्य परमार्थतो रजतत्वं नास्तीति न रजतत्वं धर्मैकदेश इति चेन्न । यक्षानुरूपो बलिरितिन्यायेनानुमित्याभासानुगुणस्यैकदेशस्य विद्यमानत्वात् । तथा च प्रयोगः–विवादाध्यासितं रजतज्ञानं पुरोवर्तिविषयं रजतार्थिनस्तत्र नियमेन प्रवर्तकत्वात् । यदुक्तसाधनं तदुक्तसाध्यं यथोभयवादिसंमतं सत्यरजतज्ञानम् । विवादपदं शुक्तिशकलं रजतज्ञानविषयोऽव्यवधानेन रजतार्थिप्रवृत्तिविषयत्वाद्रजतपद[3]समानाधिकरणपदान्तरवाच्यत्वाद्वा वस्तुरजतवत् । यदुक्तं रजतज्ञानस्य शुक्तिकालम्बनत्वेऽनुभवविरोध इति । तदप्ययुक्तम् । विकल्पासहत्वात् । तथा हि–तत्र किं रजताकारप्रतीतिं प्रति शुक्तेरालम्बनत्वेऽनुभवविरोध उद्भाव्यत इदमंशप्रतीतेर्वा । नाऽऽद्यः । अनङ्गीकारपराहतत्वात् । न द्वितीयः । इदंतानियतदेशाधिकरणस्य चाकचक्यविशिष्टस्य वस्तुनो रजतज्ञानालम्बनत्वमनवलम्बमानस्य भवत एवानुभवविरोधात् । इदं रजतमिति सामानाधिकरण्येन पुरोवर्तिन्यङ्गुलिनिर्देशपूर्वकमुपादानादिव्यवहारदर्शनाच्च । यच्चोक्तम्–दोषाणामौत्सर्गिक[4]कार्यप्रसवशक्तिप्रतिबन्धकतया विपरीतकारित्वं नास्तीति । तदप्ययुक्तम् । दावदग्धवेत्रबीजादौ तथा दर्शनात् । न च दग्धस्य वेत्रबीजत्वं नास्तीति मन्तव्यम् । श्यामस्य घटस्य रक्ततामात्रेण घटत्वानिवृत्तिप्रसङ्गात् । ननु घटोऽयं घटोऽयमित्यनुवृत्तयोः प्रत्ययप्रयोगयोः सद्भावाद्घटत्वस्य सद्भाव इति चेन्न । अत्रापीदं वेत्रबीजमिति तयोः समानत्वात् । न च बह्वन्नपचनसामर्थ्यं जाठरस्यैव जातवेदसो न भस्मकव्याधेरिति वक्तुं युक्तम् । तस्य मन्दमल्पपचनसामर्थ्येऽपि सहसा महत्पचनस्य भस्मकव्याधिसाहायकमन्तरेणानुपपत्तेः । अन्यथा सर्वेषां तथा[5]पत्तेः । किंच

---

१ ख. शक्यशक्यं व्या° । २ ख. स विवचो° । ३ ख. °पदं स° । ४ ख. °णामतेसर्गि°
५ ख. °थातथाप° ।

ज्ञानानामज्ञानतो यथार्थव्यवहारकारणत्वेऽपि दोषवशादयथार्थ-व्यवहारकारणत्वमङ्गीकुर्वाणो भवानेव पर्यनुयोज्यो भवति । तदुक्तं भाष्ये—यश्चोभयोः समानो दोषो द्योतते तत्र कश्चोद्यो भवतीति । अत्राप्युक्तम्—

यश्चोभयोः समो दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥ इति ।

तथाऽपि मामकस्यानुमानस्य किं दूषणं दत्तमासीत् । यद्यनुमानदूषणं विना न परितुष्यति हन्त कालात्ययोपदिष्टता । कृष्णवर्त्मानुष्णत्वानुमानवत् । एतावन्तं कालं यदिदं रजतमित्यभादसौ शुक्तिरिति प्रत्यक्षेण प्राचीनप्रत्ययस्यायथार्थत्वं प्रवेदयता यथार्थत्वानुमानस्यापहृतविषयत्वाद्बाध्यत्वसंभवात् । यच्चोक्तं स्वगोचरव्यभिचारे सर्वानाश्वासप्रसङ्ग इति । तदसांप्रतम् । संविदां क्वचित्संवादिव्यवहारजनकत्वेऽपि न सर्वत्र तच्छङ्कया प्रवृत्त्युच्छेद इति यथा तावके मते तथा मामकेऽप्यसौ पन्था न वारित इति समानयोगक्षेमत्वात् । तौतातितमतमवलम्ब्य विधिविवेकं व्याकुर्वाणैराचार्यवाचस्पतिमिश्रैर्बोधकत्वेन स्वतः प्रामाण्यं नाव्यभिचारेणेति न्यायकणिकायां प्रत्यपादि । तस्मादविश्वासशङ्कानवकाशं लभते । ननु माध्यमिकमतावलम्बनेन रजतादिविभ्रमालम्बनमसदिति चेत्तदुक्तमसतोऽपरोक्षप्रतिभासायोग्यत्वात्तदुपादित्सया प्रवृत्त्यनुपपत्तेश्च । ननु विज्ञानमेव वासनादिस्वकारणसामर्थ्यासादितदृष्टान्तसिद्धस्वभावविशेषमसत्प्रकाशनसमर्थनमुपजातम् । असत्प्रकाशनशक्तिरविद्यासंवृत्तिरिति पर्यायाः । तस्मादविद्यावशादसन्तो भान्तीति चेत् । तदपि वक्तुमशक्यम् । शक्यस्य दुर्निरूप्यत्वात् । किमत्र शक्यं कार्यं ज्ञाप्यं वा । नाऽऽद्यः । असतः कार्यत्वानुपपत्तेः । न द्वितीयः । शक्यस्य कारणत्वेनाङ्गीकृतत्वाज्ज्ञानादन्यस्याज्ञानस्याप्यनुपलब्धेः । उपलब्धौ वा तस्यापि ज्ञापकत्वेन ज्ञानान्तरापेक्षायामनवस्थापत्तेश्च । अथैतद्दोषपरिजिहीर्षया विज्ञानरूपमेवासतः प्रकाशत इति कक्षी क्रियत इति चेदत्र देवानांप्रियः प्रष्टव्यः पुनः । असौ सदसतोः संबन्धो निरूप्यनिरूपकभावोऽविनाभावो वा । नाऽऽद्यः । असतं

---

१ ख. °ज्ञानाद्यथा° । २ ख. °मादोषं तेमेक' । ३ ख. °ष्टकृ° । ४ ख. यथार्थ° । ५ ख. °सङ्गयति । ६ ख. °त्सन्नादि । ७ ख. °र्ध्यासादिताद्द° । ८ ख. सिद्धस्व° । ९ ख भान्निति । १० ख. °नस्वरूप° ।

उपकाराधारत्वायोगेनानुपकृततया निरूपकत्वानुपपत्तेः । न चरमः । धूमधूमध्वजयोरिव तदुत्पत्तिलक्षणस्य शिंशपावृक्षयोरिव तादात्म्यलक्षणस्य वाऽविनाभावनिदानस्य सदसतोरसंभवात् । तस्माद्विज्ञानमेवासत्प्रकाशत इत्यसद्वादिनामयमसत्प्रलाप इत्यारोप्यमाणं नासत् । ननु विज्ञानवादिनयानुसारेण प्रतीयमानं रजतं ज्ञानात्मकम् । तत्र च युक्तिरभिधीयते—यद्यथाऽनुभूयते तत्तथा, अन्यथात्वं तु बलवद्बाधकोपनिपातादास्थीयत इत्युभयवादिसंमतोऽर्थः । तत्र च नेदं रजतमिति निषिद्धेदंभावं रजतमर्थादान्तरज्ञानरूपमवतिष्ठते । न चेदंतया निषेधे सत्यनिदन्तया च बहिरपि व्यवस्थोपपत्तेः कुतः संविदाकारतेति वाच्यम् । व्यवहितान्यापरोक्षत्वानुपपत्तावपरोक्षस्य विज्ञानस्य कक्षीकर्तव्यत्वात् । तथा च प्रयोगः—विवादपदं विज्ञानाकारः संप्रयोगमन्तरेणापरोक्षत्वाद्विज्ञानवदिति । तदनुपपन्नम् । विकल्पासहत्वात् । बाधकोऽवबोधः किं साक्षाज्ज्ञानाकारतां बोधयत्यर्थाद्वा । नाऽऽद्यः । नेदं रजतमिति प्रत्ययस्य रजतविवेकमात्रगोचरस्य ज्ञानाभेदगोचरतायामनुभवविरोधात् । नेदं रजतमिति रजतस्य पुरोवर्तित्वप्रतिषेधो ज्ञानाकारतां कल्पयतीति चेत् । तदेतद्वार्तम् । प्रसक्तप्रतिषेधात्मनो बाधकावबोधस्य तत्रैव सत्त्वात्प्रतिषेधोपपत्तेः । विज्ञानाकारत्वसाधनमप्यविज्ञानाकारे बहिष्ठे साक्षिप्रत्यक्षे भावरूपाज्ञाने वर्तत इति सव्यभिचारः । नन्वन्यथाख्यातिमतानुसारेण रजतस्य देशान्तरसत्त्वेन भाव्यम् । अन्यथा तस्य प्रतिषेधप्रतियोगित्वानुपपत्तेः । न हि कश्चित्प्रेक्षावाञ्शशविषाणं प्रतिषेद्धुं प्रभवति । तदुक्तम्—

> व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता ।
> अभावविरहात्मत्वं वस्तुनः प्रतियोगिता ॥ इति ।

तथा च तस्य देशान्तरसत्त्वमाश्रयणीयमिति चेत्तदपि न प्रमाणपद्धतिमध्यास्ते । असतः संसर्गस्येव कलधौतस्य निषेधप्रतियोगित्वोपपत्तेः । नन्विदं रजतमिति ज्ञानमेकमनेकं वा । न तावदाद्यः । अपसिद्धान्तापत्तेरसंभवाच्च[1] । तथा हि शुक्तीदमंशेन्द्रियसंप्रयोगादिदमाकारान्तःपरिणामरूपमेकं[3] ज्ञानं जायते । न च तत्र कलधौतं विषयभावमाकल्पयितुमुत्सहते । असंप्रयुक्तत्वात्तस्य । विषयत्वाङ्गीकारे सर्वज्ञत्वापत्तेः । न च[4] चक्षुरन्वयव्यतिरेकानुविधायितया तज्ज्ञानस्य तज्जन्यत्वं वाच्यम् । इदमंश-

१ ख. °तिवादिम° । २ ख. °च्च शु° । ३ ख. °रूपात्मकं । ४ ख. चक्षु° ।

ज्ञानोत्पत्तौ तदुपेक्षयोपपत्तेः[1]। न चापि संस्कारात्[2]। रजतज्ञानस्य जन्यस्मृतित्वापत्तेः[3]। अथेन्द्रियदोषस्य तत्करणत्वम् । तदप्ययुक्तम् । स्वातन्त्र्येण तस्य ज्ञानहेतुत्वानुपपत्तेः । न हि ग्रहणस्मरणाभ्यामन्यः प्रकारः समस्ति । तस्मादिदमंशरजततादात्म्यविषयमेकं विज्ञानं न घटते । नाप्यनेकमख्यातिमतापत्तेरिति[4] चेदुच्यते । प्रथमं दोषकलुषितेन चक्षुषेदंतामात्रविषयान्तःकरणवृत्तिरुत्पद्यते । अनन्तरं तया वृत्त्या चैतन्यावरणाभिभवे सति तच्चैतन्यमभिव्यज्यते । पश्चादिदमंशचैतन्यनिष्ठाविद्यारागादिदोषकलुषिता कलधौताकारेण परिणमते । इदमाकारान्तःकरणपरिणामावच्छिन्नचैतन्यनिष्ठा कलधौतगोचरपरिणामसंस्कारसचिवा कलधौतज्ञानाभासाकारेण परिणमते । तौ च रजतवृत्तिपरिणामौ स्वाधिष्ठानेन साक्षिचैतन्येनाव्यवधानेन भास्येते । तथा च सवृत्तिकाया अविद्यायाः साक्षिभास्यत्वाभ्युपगमे वृत्त्यन्तरवेद्यत्वाभावान्नानवस्था । यद्यप्यन्तःकरणवृत्तिरविद्यावृत्तिश्चेति द्वे इमे ज्ञाने तथाऽपि विषयाधीनं फलम् । ज्ञातो घट इति विषयावच्छिन्नतया फलप्रतीतेः । तद्विषयश्च सत्यमिथ्याभूतयोरिदमंशरजतांशयोरन्योन्यात्मकतयैकत्वमापन्नः । तस्माद्विषयावच्छिन्नफलस्याप्येकत्वाज्ज्ञानैक्यमुपचर्यते । तदुक्तम्—

शुक्तादिमंशचैतन्यस्थिताविद्या विजृम्भते ।
रागादिदोषसंस्कारसचिवा रजतात्मना ॥
इदमाकारवृत्त्युक्तचैतन्यस्था तथाविधा ।
विवर्तते तद्रजतज्ञानाभासात्मनाऽप्यसौ ॥
सत्यमिथ्यात्मनोरैक्यादेकस्तद्विषयो मतः ।
तद्यावृत्तफलैकत्वाज्ज्ञानैक्यमुपचर्यते ॥ इति ।

पञ्चपादिकायामपि[5] फलैक्याज्ज्ञानैक्यमुपचर्यत इति । ननु शुक्तिकामस्तके भाव्यमानस्य कलधौतस्य तथैव[6] सत्यत्वाभ्युपगमेनेदं रजतमिति निषेधः कथं प्रभवेदिति चेन्न । प्रातिभासिकसत्यत्वेऽपि पारमार्थिकसत्यत्वाभावेन प्रतिपन्नोपाधौ प्रतियोगित्वासंभवात् । तदुक्तं पञ्चपादिकाविवरणे—त्रिविधं सत्त्वम् । परमार्थसत्त्वं ब्रह्मणः । अर्थक्रियासामर्थ्यं सत्त्वं मायोपाधिकमाकाशादेः । अविद्योपाधिकं सत्त्वं रजतादेरिति । अन्यत्राप्युक्तम्—

---

१ तदपेक्षाया उप° । २ °स्काराद्रजत° । ३ ख जन्मस्मृ° । ४ ख. °ख्याविमतापत्तेरि° । ५ ख. °पिपत्तैक्यज्ञा° । ६ ख. तदैव ।

कालत्रये ज्ञातृकाले प्रतीतिसमये तथा ।
बाधाभावात्पदार्थानां सत्त्वत्रैविध्यमिष्यते ।
तात्त्विकं ब्रह्मणः सत्त्वं व्योमादेर्व्यावहारिकम् ॥
रूप्यादेरर्थजातस्य प्रातिभासिकमिष्यते ॥ इति ।
लौकिकेन प्रमाणेन यद्बाध्यं लौकिकेऽवधौ ।
तत्प्रातिभासिकं सत्त्वं बाध्यं सत्येव मातरि ॥
वैदिकेन प्रमाणेन यद्बाध्यं वैदिकेऽवधौ ।
तद्व्यावहारिकं सत्त्वं बाध्यं मात्रा सहैव तत् ॥ इति ।

ततः ख्यातिबाधान्यथानुपपत्त्या भ्रान्तिगोचरस्य मायामयस्य रजतादेः सदसद्विलक्षण[1]त्वलक्षणमनिर्वचनीयत्वं सिद्धम् । तमवोचच्चित्सुखाचार्यः—

प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत् ।
गाहते तदनिर्वाच्यमाहुर्वेदान्तवादिनः ॥ इति ।

ननु मायाविद्ययोः स्वाश्रयव्यामोहहेतुत्वतदभावाभ्यां भेदस्य जागरूकत्वेनाविद्यामयत्वे वक्तव्ये मायामयत्वोक्तिरारोप्यस्यायुक्तेति चेत्तदयुक्तम् । अनिर्वचनीयत्वतत्त्वाभासप्रतिबन्धकर्[2]त्वादिलक्षणजातस्य मायाविद्ययोः समानत्वात् । किंचाऽऽश्रयशब्देन द्रष्टोच्यते कर्ता वा । नाऽऽद्यः । मन्त्रौषधादिनिमित्तमायादर्शिनस्तस्य व्यामोहदर्शनात् । न द्वितीयः । मायावित्वस्याप्रयोजकत्वात् । बाधनिश्चयमात्रादिप्रतीकारबोधयोरेव प्रयोजकत्वात् । अपरथा पङ्ग्वन्धवत्कर्ताऽपि व्यामुह्येत । न चेच्छानुविधानाननुविधानाभ्यां तयोर्भेद इति भणितव्यम् । मायास्थले मणिमन्त्रौषधादिप्रयोगवदविद्यास्थलेऽपि द्विचन्द्रकेशोण्ड्रकादिविभ्रमनिमित्ताङ्गुल्यवष्टम्भादावपि स्वातन्त्र्योपलम्भात् । अत एव तत्र तत्र श्रुति[3]सूत्रभाष्यादिषु मायाविद्ययोरभेदेन व्यवहारः संगच्छते । क्वचिद्विक्षेपप्राधान्येनाऽऽवरणप्राधान्येन च मायाविद्ययोर्भेदे तद्व्यवहारो न विरुध्यते । तदुक्तम्—

मायाविक्षिपदज्ञानं मुक्तेच्छावशवर्ति वा ।
अविद्याच्छादयत्तत्त्वं तदिच्छानुविधायि वा ॥ इति ।

नन्वविद्यासद्भावे किं प्रमाणम् । अहमज्ञो मामन्यं न जानामीति प्रत्यक्षप्रतिभास एव । ननु ज्ञानाविषयोऽयं नाभिप्रेतमर्थं गमयतीति चेत् । न ताव-

१ ख. °णम° । २ ख. °कत्वविल° । ३ ख. तिस्मृतिसू° । ४ ख. मामाचक्षिपतज्ञानं । ५ ख. °मयेदिति ।

दनुपलब्धिवादिनश्चोद्यमेतत् । परोक्षप्रतिभासहेतुत्वात्तस्याः । अयमपि परोक्षप्रतिभास एवेति चेन्न तावल्लिङ्गशब्दानुपपद्यमानार्थजन्यः । ज्ञानकरणत्वात्तेषाम् । न चैतत्सामग्रीकाले ज्ञानमास्ते । अनुभूयते वा । अनुपलब्ध्याजन्यत इति चेन्न तावदियमज्ञाता करणम् । प्रत्यक्षेतरस्य ज्ञानकरणत्वनियमात् । नापि ज्ञातैव करणम् । अनुपलब्ध्यनवस्थानात् । न च यथा परेषाम[1]भावग्रहणे योग्यानुपलब्धिः सहकारिणी तथा[2] नः करणमिति शङ्क्यम् । ज्ञानकरण इव सहकारिणि ज्ञातत्वाज्ञात[3]त्वानियमाभावात् । अस्तु वा तथा ज्ञेयाभावग्रहणे करणम् । ज्ञानाभावग्रहणे करणं न भवत्येवेति वक्ष्यते । प्रत्यक्षाभावादिति तु प्रत्यक्षेण तावद्धर्मिप्रतियोगिज्ञानयोः सतोरात्मनि ज्ञानमात्राभावग्रहणं न ब्रूयात् । घटवति भूतले घटाभावस्येव ज्ञानमात्रा[5]भावस्य ग्रहीतुमशक्यत्वात् । तयोरसतोस्तु सुतरां कारणाभावाद्योग्यानुपलब्ध्या वा फललिङ्गा[6]भावेन वाऽऽत्मनि ज्ञानमात्रा[7]भावग्रहणं दुर्लभम् । परमतेऽप्ययं न्यायः समानः । तदेवमात्मनि प्रत्यक्षेण वाऽन्येन ज्ञानमात्राभावस्य ग्रहणमशक्यमिति स्थितम् । ननु ज्ञानविशेषाभावः प्रत्यक्षेण गृह्यताम् । न तावत्स्मरणाभावः । अभावग्रहणे प्रतियो[8]गिग्रहणस्य कारणत्वात् । नाप्यनुभवाभावस्तस्यावर्जनीयत्वात् । न त्वात्मनि घटानुभवाभावः प्रत्यक्षविषयस्तर्ह्यहमज्ञ इति ज्ञानसामान्यवचनो[9] जानाति-[10]र्ज्ञानविशेषेऽनुभवे लक्षणया वर्तनीयः[11] । लक्षणा च संबन्धानुपपत्तौ सत्यां वर्तते । संबन्धस्तावदनुभवत्वज्ञानत्वयोरेकव्यक्तिसमावेशो व्याप्यव्यापकभावो वा विद्यत एवानुपपत्तिं तु न पश्या[12]मः । नन्वनुभवाभावे प्रत्यक्ष[13]स्य प्रमेयलाभस्तेनैव तस्यार्थवत्ता सिध्यति । सत्यम् । प्रयोजनमेतन्नानुपपत्ति[14]रन्योन्याश्रयात् । नन्वहमज्ञ इत्यत्र नञ्, आत्मनि ज्ञानमात्राभावं न ब्रूते ज्ञानवति तस्मिंस्[15]तदभावान्नाप्यनुभवाभावं ज्ञानोक्तेस्तदनभिधायकत्वान्नैरर्थक्यं च न युक्तमित्यनयैवानुपपत्त्या लक्षणेत्युक्तलक्षणैवाविद्या[16] तदर्थस्तु संदेह इति चेन्न । असमत्वात्कोटिद्वयस्य[17] हि तत्र प्रति योगिनिवृत्त्या नञर्थः । एवमत्र प्रतियोगिव्याप्य निवर्त्योऽन्यथेति

---

१ ख. महारग्र° । २ ख. °थाक° । ३ ख. °तत्त्वं नेमाभा° । ४ ख. °वदिति । ५ ख. °त्राचभा° । ६ ख. °ङ्गाद्यभा° । ७ ख. °त्रावभा° । ८ ख. गिस्मरण° । ९ ख. °चने ज्ञाना° । १० ख. °शेषानु° । ११ ख. °नीयल° । १२ ख. °श्याम्य न° । १३ ख. °क्षप्र° । १४ ख. °तेरन्यो° । १५ स्तदाभा° । १६ ख. °निवर्त्या नार्थः । १७ ख. °त्योऽनर्थ इति° ।

जानातिसमभिव्याहृतस्य नञः क्वचिदुक्तलक्षणाविद्याविषयत्वसिद्धि-मन्तरेण न संदेह इत्यवश्यंभावेन[1] सैव जानातिसमभिव्याहृतस्य[2] नञः सर्वत्र तद्विषयत्वमवगमयति विलुम्पति ज्ञानाभावकोऽप्यन्तरमिति क्व संदेहावकाशः । तदेवं[3] लक्षणाहेत्वभावेऽभावाभावोऽप्यात्मनि न प्रत्यक्षेण गृह्यत इति परिशेषादुक्तलक्षणाविद्यैवाज्ञ इति प्रतिभासस्य विषय इति स्थितम् । अस्तु वा ज्ञानाभावप्रतिभासः । अयमभावश्च प्रतियोगी यत्र निषिध्यते न ततस्तत्त्वान्तरमन्यदधिकरणभावात्[4] । माभूदन्यस्वभावत्वम-न्यभावत्वं तु स्यात् । ननु तदपि[5] विरुद्धम् । सत्यं सति भेदे, स च प्रमाणात्तच्च प्रतियोग्यभावात्[6] । अधिकरणतस्तत्त्वान्तरेणाघटं[7] भूतल-मित्यभिज्ञानवदेतदिति चेन्मा भूतामेते प्रतियोगिना सहानुभूयमानेऽधि-करणे । प्रतियोगिस्मरणे सत्यनुभूयमानेऽधिकरणे तु स्याताम् । एवमप्युप-पत्तौ न तत्त्वान्तरविषयत्वं कल्प्यम् । काऽनुपपत्तिरिति चेद्बाधकाभावस्ता-वदुक्त एव । बाधकं तु कल्पनागौरवमेव । तथा हि—तत्त्वान्तरत्वं तावदेकं कल्प्यम् । तस्यापरोक्षत्वायेन्द्रियसंनिकर्षः कल्प्यः । स च संयोगादिर्न भव-तीति संयुक्तविशेषणत्वादिः[10] कल्प्य इत्यतो वरमुक्तलक्षणस्याधिकरणस्य व्यवहारविषयेऽङ्गीकारः[11] । सति चैवं ज्ञानाभावेनापि प्रतियोगिस्मृतौ सत्या-[12]मननुभूयमानमधिकरणं ज्ञातैव । स च न केवलमन्तःकरणं जडत्वात् । नापि केवल आत्मैवापरिणामित्वादगुणत्वाच्च । अत उभयोर्भेदाध्यासे[13] आत्माध्यासश्चोक्तलक्षणाविद्याऽऽत्मेत्यायातमविद्यायामेवाहमज्ञ इति प्रतिभासः प्रमाणमिति । अनुमानं च—विवादपदं[14] प्रमाणज्ञानं स्वप्रागभा-वव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमप्रकाशि-[15]तार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति । वस्तुपूर्व-कमित्युक्त आत्मवस्तुपूर्वकत्वेनार्थान्तरता । तदर्थं वस्त्वन्तरेति । तथाऽपि विषयभूते वस्त्वन्तरेऽर्थान्तरता तदर्थं स्वदेशगेत[16] इति । अदृष्टादिकं प्रत्यादेष्टुं स्वनिवर्त्येति । उत्तरज्ञाननिवर्त्यं प्रथमज्ञानं निवर्तयितुं स्वविष-[17]यावरणेति । प्रागभावं प्रतिक्षेप्तुं स्वप्रागभावव्यतिरिक्तेति । प्रागभाव-

---

१ ख. °इयं भवति सै° । २ ख. °स्य नञिस° । ३ ख. °देवल° । ४ ख °दवि° । ५ ख. सत्त्वं° । ६ ख. °वात्स्वाधि° । ७ ख. °न्तरत्वेनास्यद्य° । ८ ख. °ज्ञावचन एत° । ९ ख °प्युत्पत्तौ नत्वा° । १० ख. °शेषेण° । ११ ख. °षयाङ्गीकारः सति ज्ञा° । १२ ख. सत्वान° । १३ ख. सात्माध्या° । १४ ख. °तिवाऽनु° । १५ ख. °देशं ग° । १६ ख. °गतेति । अ° । १७ ख. °ति स्वप्रा° ।

व्यतिरिक्तपूर्वकमित्युक्ते विषयेणा[1]र्थान्तरता । तदर्थं विषयावरणेति । तादृश-मन्धकारं व्यासेद्धुं स्वानिवर्त्येति । विषयगतामज्ञाततां निराकर्तुं स्वदेशग-तेति । मिथ्याज्ञानमपोहितुं वस्त्वन्तरेति । धारावाहिकविज्ञाने व्यभिचारं व्यासेद्धुमप्रकाशितेति । मध्यवर्तिप्रदीपप्रभायां साध्यसाधनवैधुर्यप्रतिरो-धाय प्रथमोत्पन्नाविशेषणम् । सौरालोकव्याप्तदेशस्थप्रदीपप्रभाप्रतिक्षेपाया-न्धकारेति । न च ज्ञानसाधके प्रमाणे व्यभिचारः शङ्कनीयः । प्रतिपन्नं प्रत्य-सत्त्वनिवृत्तिमात्रस्य प्रमाणीकृतत्वात् । तदुक्तं देवताधिकरणे कल्पतरुका-रैरनुमानादिभिरसत्त्वनिवृत्तिः क्रियत इति । ननु साधनविकलो दृष्टान्त इति चेन्न । प्रकाशशब्देन तमोविरोध्याकारस्य विवक्षितत्वात् । तदुक्तं विव-रणविवरणे सहजसर्वज्ञविष्णुभट्टोपाध्यायैः । न चात्र हेतुदृष्टान्तयोरेक-प्रकाशरूपानन्वयः शङ्कनीयः । तमोविरोध्याकारो हि प्रकाशशब्दवाच्यः । तेनाऽऽकारेणैक्यमुभयत्रास्तीति । नरेन्द्र[8]गिरिश्रीचरणैस्त्वित्थमुक्तम्—अप्र-काशितप्रकाशव्यवहारहेतुत्वं हेत्वर्थः । तस्य चोभयत्रानुगतत्वान्नासिध्या-दिरिति । श्रुतेश्च । भूयश्चान्ते विश्वमायानिवृत्तिरित्यादिका श्रुतिः[11] ।

तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते ।
योगी मायाममेयाय तस्मै विद्यात्मने नमः ॥ इति ।

एतेनैतत्प्रत्युक्तं[12] यदुक्तं भास्करेण क्षपणकचरणं प्रमाणशरणे भेदा-भेदवादिनां भावरूपमज्ञानं नास्ति किं तु ज्ञानाभाव इति । तथा च[13] भास्करप्रणीतशारीरकमीमांसाभाष्यग्रन्थः । यदेव पररूपादर्शनं सैवाविद्येति । भावरूपाज्ञानानभ्युपगमे जीवेश्वरादिविभागानुपपत्तेः । न च भाविकः परमात्मनोंऽशो जीव इति वाच्यम् । निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनमित्यादिश्रुतिविरोधात् । के च न शाक्ताः—शक्तिं मायाशब्दार्थभूतां जगत्कारणत्वेनाङ्गीकृतां सत्यामभ्युपेत्य मातुलिङ्ग-गदाखेटविधारिणी महालक्ष्मीस्तस्याः प्रथमावतार इति वर्णयन्ति । सा च कालरात्रिः सरस्वतीति द्वे शक्ती उत्पाद्य ब्रह्माणं पुरुषं श्रियं च स्त्रिय-मुत्पादयामास । स्वयं मिथुनं जनयित्वा स्वसुते अप्याहाहमिव युवामपि

---

१ ख. °षयाणा° । २ ख. °कारव्या° । ३ ख. °शब्दप्र° । ४ ख. °चारशङ्कनीयविप्र° । ५ ख. °माणकृत्यत्वा° । ६ ख. °भक्तो पा° । ७ ख. °शब्दो वाच्यते साका° । ८ ख. °रेन्द्रागि° । ९ ख. °तव्य° । १० ख. °त्वर्थोऽस्य । ११ ख. °श्रुतिश्च । त° । १२ ख. °क्तं भा° । १३ ख. नं नैवा° । १४ शान्तमि° ।

मिथुनमुत्पादयतमिति। ततः कालरात्रिर्विष्णुं पुरुषं गौरीं च श्रियमुदपादयत्। सरस्वती च महादेवं पुरुषं स्वरां स्त्रियं च जनयामास। ततश्चाऽऽदिर्विवाहमकरोदकारयच्च। एवं ब्रह्मणे स्वरां विष्णवे श्रियं शिवाय गौरीं दत्त्वा शक्तियुक्तानां तेषां सृष्टिस्थितिसंहाराख्यानि कर्माणि प्रत्यपादयदिति। तदेतन्मतं श्रुत्यादिमूलप्रमाणविधुरतया च स्वोत्प्रेक्षामात्रपरिकल्पितमिति स्वरूपव्याक्रियैव निराक्रियेत्युपेक्षणीयम्। ततश्चानिर्वचनीयानाद्यविद्यालसितः प्रत्यगात्मनि प्रतीयमानः प्रमातृत्वादिप्रपञ्च इत्यलमतिप्रसङ्गेन। ननु किमर्थं प्रमातृत्वादीनामाविद्यकत्वं निगद्यते ब्रह्मज्ञानेन निवर्तनाय जीवस्य ब्रह्मभावाय वा। न प्रथमः। शास्त्रप्रामाण्यादेव सत्यस्यापि ज्ञानेन निवृत्तेरुपपत्तेरुपलम्भाच्च। तथा हि—

सेतुं दृष्ट्वा विमुच्येत ब्रह्महा ब्रह्महत्यया।

इत्यादिना पापं सनीस्रस्यते विषयदोषदर्शनेन रागो दंदह्यते तार्क्ष्यध्यानेन विषं शम्यत एवं कर्तृत्वादिबन्धः पारमार्थिकोऽपि तत्त्वज्ञानेन निवर्त्येत। न चरमः। औपाधिकस्य जीवभावस्योपाधिनिवृत्त्या निवृत्तौ ब्रह्मभावसंभवात्तस्माद्बन्धस्याऽऽविद्यकत्ववाचोयुक्तिः सावद्येतिचेन्नैतदनवद्यम्। सत्यस्याऽऽत्मवज्ज्ञानानिवर्त्यत्वानुपपत्तेः। बन्धस्य मिथ्यात्वमन्तरेण शास्त्रप्रामाण्यादपि तदसिद्धेश्च। शास्त्रमपि।

लोकावगतसामर्थ्यशब्दो वेदेऽपि बोधकः।

इति न्यायेन लोकावलोकितां पदशक्तिं पदार्थयोग्यतां चोररीकृत्य प्रचरतीति। अपरथा, आदित्यो यूपो यजमानः प्रस्तर इत्यादिवाक्यस्तोमस्य यथाश्रुतेऽर्थे प्रामाण्यापत्तेः। वैदिक्याः क्रियायाः समक्षक्षयितया पारत्रिकफलकरणत्वान्यथानुपपत्त्याऽपूर्वाङ्गीकरणानुपपत्तिश्च। लोके च शुक्तिव्यक्तितत्त्वाभिव्यक्तावपनीयमानस्याऽऽरोपितस्य मिथ्यात्वदृष्टौ तद्दृष्टान्तावष्टम्भेनाऽऽत्यन्तिकतत्त्वसाक्षात्कारविद्यापनोद्यस्याऽऽविद्यकस्य बन्धस्य मिथ्यात्वानुमानसंभवात्। विमतं मिथ्याऽधिष्ठानतत्त्वज्ञाननिवर्त्यत्वाच्छुक्तिकारूप्यवदिति। न च विमतं सत्यं भासमानत्वादिति प्रतिप्रयोगे समानबलतया बाधप्रतिरोधः। प्रतिरोधभियाऽन्यतरदोषत्वसंभवादिति वदितव्यम्। मरुमरीचिकोदकादौ सव्यभिचारात्। अबाधित-

---

१ ख. °मुपपा°। २ ख. °पव्यतियौवनिराश्रिये°। ३ ख. प्रतिभासमानप्र°। ४ ख. प्रपञ्चेन। ननु। ५ ख. °ह्मभवना। ६ ख. दह्यते। ७ ख. °स्तोम्यां य°। ८ ख. °पत्तेश्च। ९ ख. °नात्मतत्त्वसाक्षात्कार°। १० ख. °दोषितत्व°। ११ ख. °दितव°।

त्वेन विशेषणान्न दोष इति चेन्मैवं भाषिष्ठाः । विशेषणासिद्धेः । तत्रेदं भवान्पृष्टो व्याचष्टाम् । कतिपयपुरुषकतिपयकालाबाधितत्वं हेतुविशेषणं क्रियते सर्वथा बाधवैधुर्यं वा । न प्रथमः ।

यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपद्यते ॥

इति न्यायेन त्रिचतुरप्रतिप्रतिपादितस्यापि प्रतिपन्नन्तरेण प्रकारान्तरमुररीकृत्य प्रतिपादनात् । नापि चरमः । सर्वथा बाधवैधुर्यस्यासर्वज्ञदुर्ज्ञेयत्वात् । यद्येवं हन्त तर्हि ज्ञानात्मनोऽपि सत्यत्वं नावग[1]म्यत इति चेन्मैवं मंस्थाः । तत्सत्यं स आत्मेत्यागमसंवादगतेः । न[2] च प्रपञ्चेऽप्ययं न्याय इति मन्तव्यम् । तादृशस्याऽऽगमस्यानुपलम्भात् । प्रत्युताद्वितीयत्वं श्रावयन्त्याः[3] श्रुतेः प्रपञ्चमिथ्यात्व एव पक्षपातात् । ननु कल्पनामात्रशरीरस्य पक्षसपक्षविपक्षादेः सर्वसुलभत्वेन जयपराजयव्यवस्थया कथं कथा प्रथेत । काऽत्र कथंता ।

एवं त्रिचतुरो[4] ज्ञानजन्मनो नाधिका[5]मतिः ।

इति न्यायेन त्रिचतुरकक्ष्याविश्रान्तस्य तत्तदाभासलक्षणालिङ्गितस्य दूषणभूषणादेस्तत्र कथाङ्गत्वाङ्गीकारात् । अत एवोक्तं खण्डनकारेण व्यावहारिकीं प्रमाणसत्तामादाय विचारारम्भ इति । न च भेदग्राहिभिः प्रमाणैरद्वैतश्रुतेर्जघन्यतेति[6] शङ्क्यम् । ब्रह्मणि पारमार्थिकसत्यत्वेन तदावेदिकायास्[7]तत्त्वावेदन[8]लक्षणप्रामाण्यायाः श्रुतेर्व्यावहारिकप्रमाणभावानां प्रत्यक्षादीनां[9] च विभिन्नविषयतया परस्परं बाध्यबाधकभावासंभवात् । तदप्युक्तं तेनैव—

तथाऽद्वैतश्रुते[10] स्तावद्बाधे प्रत्यक्षमक्षमम् ।[12]
नानुमानादिकं[11] कर्तुं तवापि क्षमते मत ॥ इति ।
साधनाबाधनायास्यास्तदा प्रज्ञां प्रयच्छथ ।
क्षेप्तुं चिन्तामणिं पाणिलब्धमब्धौ यदिच्छथ ॥

तस्मात्तत्त्वज्ञानेन निवर्तनायास्य बन्धस्याज्ञानकल्पितत्वमङ्गीकर्तव्यम् । यत उक्तं यतो ज्ञानमज्ञानस्य निवर्तकमिति । यदुक्तं सत्यस्यापि दुरितस्य सेतुदर्शनेन निवृत्तिरुपलभ्यत[13] इति । तदयुक्तम् । विहितक्रियानुष्ठानेन जनितस्य धर्मस्याधर्मनिवर्तकत्वध्रौव्याद्धर्मेण पापमपनुदतीति श्रुतेः । प्रमा-

१ ख. नापग° । २ ख. °न प्र° । ३ ख. °न्त्याश्रावयन्त्या श्रु° । ४ ख. °तुरज्ञा° । ५ ख. °कामितिरि° । ६ ख. °श्रुतिर्जन्यत इति । ७ ख. तवे° । ८ ख. °त्वादेवद° । ९ ख. °क्षादिना च । १० ख. तदा । ११ ख. °नाम मानादितं क° । १२ ख. °तिर्बाधनाबा° । १३ क. लभ्येत ।

णवस्तुपरतन्त्रशालिन्या दर्शनक्रियायाश्चोदितपुरुषप्रयत्नतन्त्रत्वाभावेन वि[1]धानासंभवात् ।

ब्रह्महत्यां प्रमुच्येत तास्मिन्स्नात्वा महोदधौ ।

इत्यादिस्मृतिविहितब्रह्मचर्याङ्गसहितदूरतरदे[2]शगमनसाध्यब्रह्महननानिवृत्तिफलकसेतुस्नानप्रशंसार्थत्वात् । यस्य हि दर्शनमात्रेणैव दुरितोपशमः किमुत स्नानेन । अन्यथा दूरगमनानर्थक्यं[3] प्रसजेत् । तत्र[4] खरादीनामप्यनर्थनिवृत्तिरापतेत् । अन्धस्य न स्याच्च । ननु–

अग्निचित्कापिला राजा[5] सती भिक्षुर्महोदधिः ।
दृष्टमात्राः[6] पुनन्त्यते तस्मात्पश्येत नित्यशः ॥ इति

क्वचिद्दर्शनक्रियाया अपि विधानं दरीदृश्यत इति चेन्मैवं वोचः । तत्राप्यनयैवानुपपत्त्याऽग्निचिदाद्यर्घपरिचर्या[7]दावेव तात्पर्यावधारणात् । विषयदोषदर्शनेन विरोधभूतानभिरतिसंज्ञकवैराग्यैक[8]प्रादुर्भावाद्रागनिवृत्तौ तददर्शनमात्रमिति[9] न व्यभिचारः । यदपि[10] तार्क्ष्यध्यानादिना विषादि सत्यं विनश्यतीति[11] । तन्न शिष्यते । तत्रापि मन्त्रप्रयोगादिक्रियाया एव विषाद्यपनोदकत्वात् । ध्यानस्य प्रमात्वाभावाच्च । यदवाद्यौपाधिकस्य जीवभावस्योपाधिनिवृत्त्या निवृत्तौ ब्रह्मभावोपपत्तेर्न तदर्थमनर्थवैतथ्यकथनामिति । तदपि काशकुशावलम्बनकल्पम् । विकल्पा[12]सहत्वात् । किमुपाधेः सत्यत्वमभिप्रेत्य मिथ्यात्वं वा । न प्रथमः । प्रमाणाभावात् । नापरः । इष्टापत्तेः । तस्मादाविद्यको[13] भेद इति श्रुता[14]वाद्वितीयत्वोपपत्तयेऽभिधीयते न तु व्यंस[15]नितया । यदि वस्तुतः सर्वोपद्रवरहितमात्मतत्त्वं तर्हि कथंकारं देहादिरूपं कारागारं कारंकारं पुनः पुनस्तत्र प्रविशति । तदतिफल्गु । अविद्याया अनादित्वेन[16] दत्तोत्तरत्वात् । अतो निवृत्त्युपाय एवान्वेषणीयः प्रेक्षावता, न तु विस्मयः कर्तव्यः । ततश्च तत्त्वमस्यादिविद्यया तदविद्यानिवृत्तौ निरतिशयानन्दात्मलाभरूपपरमपुरुषार्थः सेत्स्यति । तथा चाऽऽपस्तम्ब[17]स्मृतिः–आत्मलाभान्न परं विद्यत इति । नन्वसौ नित्यलब्धः । न हि स्वयमेव स्वस्यालब्धो भवति । सत्यम् । किं त्वनादिमायां[18] सा क्षीरोदकवत्समुदाचारवृत्तितां न लभते[19] । तथा च यथा शबरादिभिर्बाल्यात्स्वसुतैः सह

१ ख. विधिं ना । २ ख. °तमावतरदे° । ३ ख. °मनर्थकं प्र° । ४ ख. °त्रस्त्रीकाराविनाऽप्यनर्थनिरात्° । ५ ख. °जाभिक्षुर्महो° । ६ ख. °त्राप्रज्ञन्त्ये° । ७ ख. चरथा° । ८ ख. °रागयकप्रादुर्भावाद्राग° । ९ ख. °मत्रादि° । १० ख. यद्यपि । ११ ख. °श्यतीति त° । १२ ख. °ल्पानुपपत्तेः । किं° । १३ ख. °विन्यकोऽपिन्य° । १४ ख. श्रुतौद्वि° । १५ ख. व्यपनीतं वंवस्तु° । १६ ख. °नबतोत्त° । १७ ख. °म्बश्रुतिः । १८ ख. °यासंहारात्क्षीरो° । १९ ख. लभ्यते ।

वर्धितो[1] राजपुत्रस्तज्जातीयमात्मानमवगच्छन्बन्धुभिर्य एवं भूतो राजा त्वमसीति बोधिते स्वरूपे लब्धस्वरूप इव भवति तथा वेश्यास्थानीययाऽनाद्यविद्यया स्वभावान्तरं नीतं आत्मा मातृस्थानीयया तत्त्वमसीत्यादिकया श्रुत्या स्वभावं नीयते[2] । एतदाहुस्त्रैविद्यवृद्धाः[3]—

नीचानां वसतौ तदीयतनयैः[4] सार्धं चिरं वर्धित-
स्तज्जातीयमवैति राजतनयः स्वात्मानमप्यञ्जसा ।
संवादे महदादिभिः सह वसंस्तद्वद्[5]भवेत्पूरुषः
स्वात्मानं सुखदुःखजालकलितं[6] मिथ्यैव धिङ्मन्यते ॥
दाता भोगपरः समग्रविभवो यः शासिता दुष्कृताम् ।
राजा स त्वमसीति रक्षितृमुखाच्छ्रुत्वा यथावत्सं[7] तु ॥
राजीभूय जयार्थमेव यतते तद्वत्पुमान्बोधितः[8] ।
श्रुत्या तत्त्वमसीत्यपास्य दुरितं ब्रह्मैव संपद्यते ॥

येनैतत्[9]प्रत्युक्तं यदुक्तं परैः किं द्वयोस्तादात्म्यमेकस्य वा । नाऽऽद्यः । अद्वैतभङ्गप्रसङ्गात् । न द्वितीयः । असंभवादिति । तन्न । अविद्यापरिकल्पितभेदनिवृत्तिपरत्वेन तत्त्वमस्यादितादात्म्यवादप्रामाण्योपपत्तेः । तौ च पर्यनुयोगपरिहारावग्राहिषातां मनीषिभिः ।

न द्वयोरस्ति तादात्म्यं न चैकस्याद्वयत्वतः ।
अप्रामाण्यं श्रुतेरेवं नाऽऽरोपध्वंसमात्रतः ॥ इति ।

ततश्च तत्त्वमसीति तत्त्वंपदार्थश्रवणमननभावना[10]बलभुवा साक्षात्कारेणानाद्यविद्यानिवृत्तौ सच्चिदानन्दैकरसब्रह्माविर्भावः संपत्स्यत इति ब्रह्मणो जिज्ञास्यत्वं प्रथमसूत्रोक्तं युक्तम् ।

अज्ञातं विषयो ब्रह्म ज्ञातं तच्च प्रयोजनम् ।
मुमुक्षुरधिकारी स्यात्संबन्धः[11] शक्तितः श्रुतेः ॥ इति ।

जन्माद्यस्य यत इति द्वितीयसूत्रे ब्रह्म स्वरूपलक्षणतटस्थलक्षणाभ्यां न्यरूपि । तत्र स्वरूपान्तर्गतत्वे सति व्यावर्तकं स्वरूपलणं सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिवेदान्तैः प्रतिपादितम् । तस्य[12] सत्यज्ञानाद्यात्मकस्वरूपान्तर्गतत्वे सति व्यावर्तकत्वात् । तटस्थलक्षणं यतो वा इमानीत्यादीनि

---

१ ख वर्तितो । २ ख. °यते त° । ३ ख. °द्धानिचा° । ४ ख. °नयोः सार्थे चि° । ५ ख. °स्तद्वत्पु° । ६ ख. °लिलं मि° । ७ ख. °त्सतुः । रा° । ८ ख. °धिताश्रु° । ९ ख. °ते । एतेनै° । १० ख. °नादल° । ११ ख. °न्धः शुक्तितच्छ्रुतेरि° । १२ ख. °तस्त्वज्ञानाभ्यात्मक° ।

वाक्यानि निरूपयन्ति जगज्जन्मादिकारणविवरणे। जगज्जन्मस्थिति[1]ध्वंसा यतः सिध्यन्ति तत्स्वरूपतटस्थाभ्यां लक्षणाभ्यां प्रदर्श्यत इति । शास्त्रयोनित्वादितितृतीयसूत्रे प्रथमवर्णकेन षष्ठीसमाससमाश्रित्य सर्वज्ञत्वं प्रत्यपादि। द्वितीयवर्णकेन बहुव्रीहिसमासमभ्युपगम्य ब्रह्मणो वेदान्तप्रमाणकत्वं प्रत्यज्ञायि । तत्तु समन्वयादिति चतुर्थे सूत्रे प्रथमवर्णकेन वेदान्तानां ब्रह्मणि तात्पर्यं प्रत्यपादि । द्वितीयवर्णकेन वेदान्तानां प्रतिपत्तिविधिशेषतया ब्रह्मप्रतिपादक[2]त्वं प्रत्यक्षेऽपि । दिङ्मात्रमत्र [3]प्रदर्शितम् । शिष्टं शास्त्र एव स्पष्टमिति सकलं समञ्जसम् ॥ श्रीरस्तु ॥

इति श्रीसायणाचार्यविरचिते सकलदर्शनशिरोलंकाररत्नं
श्रीमच्छांकरदर्शनं परिसमाप्तम् ॥

समाप्तोऽयं सर्वदर्शनसंग्रहः ।

---

१ ख. °तिदसायतः सेध्यान्तिकारणात्त । २ ख. °कत्वत्र° । ३ ख. प्रादर्शि शि° ।

॥ ॐ तत्सद्ब्रह्मणे नमः ॥

# ॥ अथ मधुसूदनसरस्वतीकृतौ प्रस्थानभेदः ॥

अथ सर्वेषां शास्त्राणां भगवत्येव तात्पर्यं साक्षात्परम्परया वेति समासेन तेषां प्रस्थानभेदोऽत्रोद्दिश्यते । तथा हि—ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति वेदाश्चत्वारः । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति वेदाङ्गानि षट् । पुराणन्यायमीमांसा धर्मशास्त्राणि चेति चत्वार्युपाङ्गानि । अत्रोपपुराणानामपि पुराणेऽन्तर्भावः । वैशेषिकशास्त्रस्य न्याये, वेदान्तशास्त्रस्य मीमांसायां, महाभारतरामायणयोः सांख्यपातञ्जलपाशुपतवैष्णवादीनां धर्मशास्त्रे, मिलित्वा चतुर्दश विद्याः । तथाचोक्तं याज्ञवल्क्येन ( १. ३. )

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ इति ।

एता एव चतुर्भिरुपवेदैः सहिता अष्टादश विद्या भवन्ति । आयुर्वेदो धनुर्वेदो गान्धर्ववेदोऽर्थशास्त्रं चेति चत्वार उपवेदाः । सर्वेषां चाऽऽस्तिकानामेतावन्त्येव शास्त्रप्रस्थानानि । अन्येषामप्येकदेशिनामेतेष्वेवान्तर्भावात् ।

ननु नास्तिकानामपि प्रस्थानान्तराणि सन्ति तान्येतेष्वनन्तर्भावात्पृथग्गणयितुमुचितानि । तथा हि—शून्यवादेनैकं प्रस्थानं माध्यमिकानाम् । क्षणिकविज्ञानमात्रवादेनान्यद्योगाचाराणाम् । ज्ञानाकारानुमेयक्षणिकबाह्यार्थवादेनापरं सौत्रान्तिकानाम् । प्रत्यक्ष[2]सलक्षणक्षणिकबाह्यार्थवादेनापरं वैभाषिकाणाम् । एवं सौगतानां प्रस्थानचतुष्टयम् । तथा देहात्मवादेनैकं प्रस्थानं चार्वाकाणाम् । एवं देहा[3]तिरिक्तदेहपरि[4]माणात्मवादेन द्वितीयं प्रस्थानं दिगम्बराणाम् । एवं मिलित्वा नास्तिकानां षट् प्रस्थानानि तानि कस्मान्नोच्यन्ते । सत्यम् । वेदबाह्यत्वात्तेषां म्लेच्छादिप्रस्थानवत्परम्परयाऽपि पुरुषार्थानुपयोगित्वादुपेक्षणीय[5]मेव । इह च साक्षाद्वा परम्परया वा पुमर्थोपयोगिनां वेदो[6]पकरणानामेव प्रस्थानानां भेदो दर्शितः । ततो न न्यूनत्वशङ्कावकाशः । अथ संक्षेपेणैषां प्रस्थानानां स्वरूपभे[7]दहे[8]तुप्रयोजनभेद उच्यते बालानां व्युत्पत्तये ।

---

१ ख. °णेष्वन्त° । २ ख. °क्षस्वलक्षण° । ३ ग. °हातिरि° । ४ ख. °रिणामात्म° । ५ ख. °यत्वमे° । ६ ग. पकार° । ७ ग. भेदेहे° । ८ ख. °हेतुः प्र° ।

तत्र धर्मब्रह्मप्रतिपादकमपौरुषेयं प्रमाणवाक्यं वेदः स च मन्त्रब्राह्मणात्मकः। तत्र मन्त्रा अनुष्ठानकारकभूतद्रव्यदेवताप्रकाशकाः । तेऽपि त्रिविधाः । ऋग्यजुःसामभेदात् । तत्र पादबद्धगायत्र्यादिच्छन्दोविशिष्टा ऋचः “ अग्निमीळे पुरोहितम् ” इत्याद्याः । ता एव गीतिविशिष्टाः सामानि । तदुभयविलक्षणानि यजूंषि । अग्नीदग्नीन्विहरेत्यादिसंबोधनरूपा निगदमन्त्रा अपि यजुरन्तर्भूता एव। तदेवं निरूपिता मन्त्राः।

ब्राह्मणमपि त्रिविधम्, विधिरूपमर्थवादरूपं तदुभयविलक्षणरूपं च। तत्र शब्दभावनाविधिरिति [1]भट्टाः। नियोगो विधिरिति[2] प्राभाकाराः। इष्टसाधनताविधिरित तार्किकादयः सर्वे । विधिरपि चतुर्विधः । उत्पत्त्यधिकारविनियोगप्रयोगभेदात्। तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिराग्नेयोऽष्टाकपालो भवतीत्यादिः । सेतिकर्तव्यताकस्य करणस्य यागादेः फलसंबन्धबोधको विधिरधिकारविधिर्दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिः। अङ्गसंबन्धबोधको विधिर्विनियोगविधि र्व्रीहिभिर्यजेत समिधो यजतीत्यादिः। साङ्ग[3]प्रधानकर्मप्रयोगैक्यबोधकः पूर्वोक्तविधित्रयमेलनरूपः प्रयोगविधिः। स च श्रौत इत्येके कल्प्य इत्यपरे । कर्मस्वरूपं च द्विविधम्—गुणकर्मार्थकर्म च, तत्र क्रतुकर्मकारकाण्याश्रित्य विहितं गुणकर्म। तदपि चतुर्विधम्। [4]उत्पत्त्याप्यविकृतिसंस्कृतिभेदात्। तत्र वसन्ते ब्राह्मणोऽग्नीनादधीत यूपं तक्षतीत्यादावाधानतक्षणादिना संस्कारविशेषविशिष्टाऽग्नियूपादेरुत्पत्तिः। स्वाध्यायोऽध्येतव्यो गां पयो दोग्धीत्यादावध्ययनदोहनादिना विद्यमानस्यैव स्वाध्यायपयः प्रभृतेः प्राप्तिः । सोममभिषुणोति व्रीहीनवहन्त्याज्यं विलापयतीत्यादावभिपवावघातविलापनैः सोमादीनां विकारः। व्रीहीन्प्रोक्षति पत्न्यवेक्षत इत्यादौ प्रोक्षणावेक्षणादिभिर्व्रीह्यादिद्रव्याणां संस्कारः। एतच्चतुष्टयं चाङ्गमेव। तथा क्रतुकारकाण्याश्रित्य विहितमर्थकर्म च द्विविधम्—अङ्गं प्रधानं च। अन्यार्थमङ्गम्। अनन्यार्थं प्रधानम्। अङ्गमपि द्विविधम्—संनिपत्योपकार[6]कमारादुपकारकं च । तत्र प्रधानस्वरूपनिर्वाहकं प्रथमम्। फलोपकारि द्वितीयम्। एवं संपूर्णाङ्ग-

१ ग. भाट्टाः। २ ग, °ति प्रभा°। ३ ख. प्रस्थानप्र°। ४ ख. उत्पाद्याप्य°। ५ ख. °मेत. द्विवि°। ६ ख. °कभेदमा°। ७ ख. °कारकं द्वि°। ८ ख. °ङ्गसंयुक्तो वि°।

साहितो विधिः प्रकृतिः । विकलाङ्गसंयुक्तो विधिर्विकृतिः । तदुभयविलक्षणो विधिर्दार्विहोमः । एवमन्यदप्यूह्यम् । तदेवं निरूपितो विधिभागः । प्राशस्त्यनिन्दान्यतरलक्षणयो[1] विधि[2]विशेषभूतं वाक्यमर्थवादः । स च त्रिविधः—गुणवादोऽनुवादो भूतार्थवादश्चेति । तत्र प्रमाणान्तरविरुद्धार्थबोधको गुणवाद आदित्यो यूप इत्यादिः । प्रमाणान्तरप्राप्त्यर्थबोधकोऽनुवादोऽग्निर्हिमस्य भेषजमित्यादिः । प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधको भूतार्थवाद इन्द्रो[3] वृत्राय वज्रमुद्यच्छदित्यादिः । तदुक्तम्—

> विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
> भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥ इति ।

तत्र त्रिविधानामप्यर्थवादानां[4] विधिस्तुतिपरत्वे समानेऽपि भूतार्थवादानां स्वार्थेऽपि प्रामाण्यं देवताधिकरणन्यायात् । अबाधिताज्ञातज्ञापकत्वं हि प्रामाण्यम् । तच्चाबाधितविषयत्वाज्ज्ञातज्ञापकत्वाच्च[5] न गुणवादानुवादयोः । भूतार्थस्य[6] तु स्वार्थे तात्पर्यरहितस्याप्यौत्सर्गिकं प्रामाण्यं विहन्यते । तदेवं निरूपितोऽर्थवादभागः । विध्यर्थवादोभयविलक्षणं तु वेदान्तवाक्यम् । तच्चाज्ञातज्ञापकत्वेऽप्यनुष्ठानाप्रतिपादकत्वान्न विधिः । स्वतः पुरुषार्थपरमानन्दज्ञानात्मकब्रह्मणि स्वार्थ उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गवत्तया स्वतः प्रमाणभूतं सर्वानपि विधीनन्तःकरणशुद्धिद्वारा स्वविशेषतामापादयदन्यशेषत्वाभावाच्च[8] । तस्मादुभयविलक्षणमेव वेदान्तवाक्यम् । तच्च क्वचिदज्ञातज्ञापकत्वमात्रेण विधिरिति व्यपदिश्यते विधिपदरहितप्रमाणवाक्यत्वेन क्वचिद्भूतार्थवाद इति व्यवह्रियत इति न दोषः । तदेवं निरूपितं त्रिविधं ब्राह्मणम् ।

एवं च कर्मकाण्डब्रह्मकाण्डात्मको वेदो धर्मार्थकाममोक्षहेतुः । स च प्रयोगत्रयेण यज्ञनिर्वाहार्थमृग्यजुःसामभेदेन भिन्नः[10] । तत्र हौत्रप्रयोग ऋग्वेदेन, आध्वर्यवप्रयोगो यजुर्वेदेन, औद्गात्रप्रयोगः सामवेदेन, ब्राह्मयाजमानप्रयोगौ त्वत्रैवान्तर्भूतौ । अथर्ववेदस्तु यज्ञानुपयुक्तः शान्तिपौष्टिकाभिचारादिकर्मप्रतिपादकत्वेनात्यन्तविलक्षण एव । एवं

---

१ ख. °धिविभा° । २ ग. 'यायावि° । ३ ख. ग. धिशे° । ४ ग. °न्द्रो वज्रहस्तः पुरंदरः । तः । ५ ख. 'नां स्तु° । ६ क. तच्च बा° । ७ ख. °र्थवादस्य । ८ ख. स्वशे° । ९ ख. °च्चनार्थवादः । स° । १० ख. °मवेदैर्भिन्न ।

प्रवचनभेदात्प्रतिवेदं भिन्ना भूयस्यः शाखाः[1] । एवं च कर्मकाण्डे व्यापारभेदेऽपि सर्वासां वेदशाखानामेकरूपत्वमेव[2] ब्रह्मकाण्डे ।

इति चतुर्णां वेदानां प्रयोजनभेदेन भेद उक्तः । अथाङ्गानामुच्यते[3] । तत्र शिक्षाया उदात्तानुदात्तस्वरितह्रस्वदीर्घप्लुतादिविशिष्टस्वरव्यञ्जनात्मकवर्णोच्चारणविशेषज्ञानं प्रयोजनम् । तदभावे मन्त्राणामनर्थकत्वात् । तथाचोक्तम् ( शि० ५२ )

> मन्त्रो हीनः स्वरतो वर्णतो वा
> मिथ्याप्रयुक्तो न तमर्थमाह ।
> स वाग्वज्रो यजमानं हिनस्ति
> यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ इति ।

तत्र सर्ववेदसाधारणी शिक्षा । अथ शिक्षां प्रवक्ष्यामीत्यादिपञ्चखण्डात्मिका पाणिनिना प्रकाशिता । प्रतिवेदशाखं च भिन्नरूपा प्रातिशाख्यसंज्ञिताऽन्यैरेव मुनिभिः प्रदर्शिता ।

एवं वैदिकपदसाधुत्वज्ञानेनोहादिकं[4] व्याकरणस्य प्रयोजनम् । तच्च वृद्धिरादैजित्याद्यध्यायाष्टकात्मकं महेश्वरप्रसादेन[5] भगवता पाणिनिनैव प्रकाशितम् । तत्र कात्यायनेन मुनिना पाणिनीयसूत्रेषु वार्तिकं विरचितम् । तद्वार्तिकस्योपरि च भगवता मुनिना पतञ्जलिना महाभाष्यमारचितम् । तदेतत्त्रिमुनि व्याकरणं वेदाङ्गं माहेश्वरमित्याख्यायते कौमारादिव्याकरणानि तु न वेदाङ्गानि किंतु लौकिकप्रयोगमात्रज्ञानार्थानीत्यवगन्तव्यम् ।

एवं शिक्षाव्याकरणाभ्यां वर्णोच्चारणपदसाधुत्वे[6] ज्ञाते वैदिकमन्त्रपदानामर्थज्ञानाकाङ्क्षायां तदर्थं भगवता यास्केन समाम्नायः समाम्नातः स व्याख्यातव्य इत्यादित्रयोदशाध्यायकं[7] निरुक्तमारचितम् । तत्र च नामाख्यातनिपातोपसर्गभेदेन चतुर्विधं पदजातं निरूप्य वैदिकमन्त्रपदार्थानामर्थः प्रकाशितः । मन्त्राणां चानुष्ठेयार्थप्रकाशनद्वारेणैव करणत्वात्पदार्थज्ञानाधीनत्वाच्च[8] वाक्यार्थज्ञानस्य मन्त्रस्थपदार्थज्ञानाय निरुक्तमवश्यमपेक्षितमन्यथाऽनुष्ठानासंभवात् । सृण्येव जर्भरी तुर्फरी तू इत्यादि दुरूहाणां ( निरु० १३–५ ) प्रकारान्तरेणार्थज्ञानस्यासंभवनीयत्वाच्च ।

---

१ ख. ग. गाथाः । २ ख. °पमेवब्रह्मकाण्डामिति । ३ ख. °ङ्गानां प्रयोजनमु° । ४ ख. °हापोहादि° । ५ ख. °सादादेव भ° । ६ ख. °धुत्वज्ञाने वै° । ७ ख. इत्यष्टाद° । ८ ख. ज्ञानस्य ।

एवं निघण्टवोऽपि वैदिकद्रव्यदेवतात्मकपदार्थपर्यायशब्दात्मका निरुक्तान्तर्भूता एव । तत्रापि निघण्टुसंज्ञकः पञ्चाध्यायात्मको ग्रन्थो भगवता यास्केनैव कृतः ।

एवमृङ्मन्त्राणां पादबद्धच्छन्दोविशेषविशिष्टत्वात्तदज्ञाने च निन्दाश्रवणाच्छन्दोविशेषनिमित्तानुष्ठानविशेषविधानाच्च । छन्दोज्ञानाकाङ्क्षायां तत्प्रकाशनाय धीः श्रीः स्त्रीमित्याद्यष्टाध्यायात्मिका छन्दोविवृतिर्भगवता पिङ्गलेन विरचिता । तत्राप्यलौकिकमित्यन्तेनाध्यायत्रयेण गायत्र्युष्णिगनुष्टुब्बृहती पङ्क्तिस्त्रिष्टुब्जगतीति सप्त च्छन्दांसि सावान्तरभेदानि निरूपितानि । अथ लौकिकमित्यारभ्याध्यायपञ्चकेन पुराणेतिहासादावुपयोगीनि लौकिकानि च्छन्दांसि प्रसङ्गान्निरूपितानि व्याकरणे लौकिकपदनिरूपणवत् ।

एवं वैदिककर्माङ्गदर्शादिकालज्ञानाय ज्यौतिषं भगवताऽऽदित्येन गर्गादिभिश्च प्रणीतं बहुविधमेव ।

शाखान्तरीयगुणोपसंहारेण वैदिकानुष्ठानक्रमविशेषज्ञानाय कल्पसूत्राणि तानि च प्रयोगत्रयभेदात्त्रिविधानि । तत्र हौत्रप्रयोगप्रतिपादकान्याश्वलायनशाङ्खायनादिप्रणीतानि । आध्वर्यवप्रयोगप्रतिपादकानि बौधायनापस्तम्बकात्यायनादिप्रणीतानि । औद्गात्रप्रयोगप्रतिपादकानि लाट्यायनद्राह्यायणादिप्रणीतानि ।

एवं निरूपितः षण्णामङ्गानां प्रयोजनभेदः । चतुर्णामुपाङ्गानामधुनोच्यते । तत्र सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितप्रतिपादकानि भगवता बादरायणेन कृतानि पुराणानि तानि च ब्राह्मं पाद्मं वैष्णवं शैवं भागवतं नारदीयं मार्कण्डेयमाग्नेयं भविष्यं ब्रह्मवैवर्तं लैङ्गं वाराहं स्कान्दं वामनं कौर्मं मात्स्यं गारुडं ब्रह्माण्डं चेत्यष्टादश ।

आद्यं सनत्कुमारेण प्रोक्तं वेदविदां वराः ।
द्वितीयं नारसिंहाख्यं तृतीयं नान्दमेव च ॥
चतुर्थं शिवधर्माख्यं दौर्वासं पञ्चमं विदुः ।
षष्ठं तु नारदीयाख्यं कापिलं सप्तमं विदुः ॥
अष्टमं मानवं प्रोक्तं ततश्चोशनसेरितम् ।
ततो ब्रह्माण्डसंज्ञं तु वारुणाख्यं ततः परम् ॥

---

१ ग. °घण्टुरपि । २ ख. °णां पद° । ३ ख. 'येणेति' । ४ ख. °व । एवंशा° । ५ खं. °न सांङ्ख्यय° । ग. °न सांख्याय° । °न शांख्याय° । ६ ख. द्राह्याय° । ७ ग. °यं नन्दिमे । ८ ख. स्मृतम् । ९ ख. वासिष्ठं ।

ततः कालीपुराणाख्यं वा[1]शिष्ठं मुनिपुङ्गवाः ।
ततो वा[2]शिष्ठं लैङ्गाख्यं प्रोक्तं माहेश्वरं परम् ॥
ततः साम्बपुराणाख्यं ततः सौरं महाद्भुतम् ।
पा[3]राशरं ततः प्रोक्तं मारीचाख्यं ततः परम् ॥
भार्गवाख्यं ततः प्रोक्तं[4] सर्वधर्मार्थसाधकम् ।

एवमुपपुराणान्यनेकप्रकाराणि द्रष्टव्यानि ।

न्याय आन्वीक्षिकी पञ्चाध्यायी गौतमेन प्रणीता। प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानाख्यानां षोडशपदार्थानामुद्देशलक्षणपरीक्षाभिस्तत्त्वज्ञानं तस्याः प्रयोजनम् । एवं दशाध्यायं वैशेषिकं शास्त्रं कणादेन प्रणीतम् । द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानामभावसमानां साधर्म्यवैधर्म्याभ्यां व्युत्पादनं तस्य प्रयोजनम् । एतदपि न्यायपदेनोक्तम् ।

एवं मीमांसाऽपि द्विविधा, कर्ममीमांसा शारीरकमीमांसा च । तत्र द्वादशाध्यायी कर्ममीमांसा "अथातो धर्मजिज्ञासा" इत्याद्यन्वाहा[6]र्ये च (१६) दर्शनादित्यन्ता भगवता जैमिनिना प्रणीता । तत्र धर्मप्रमाणम् । धर्मभेदाभेदौ । शेषशेषिभावः । क्रत्वर्थपुरुषार्थभेदेन प्रयुक्तिविशेषः । श्रुत्यर्थपठनादिभिः क्रमभेदः । अधिकारविशेषः सामान्यातिदेशः । विशेषातिदेशः । ऊहः । बाधः । तन्त्रम् । प्रसङ्गश्चेति क्रमेण द्वादशाध्यायानामर्थः । तथा संकर्षणकाण्डमप्यध्यायचतुष्टयात्मकं जैमिनिप्रणीतम् । तच्च देवताकाण्डसंज्ञया प्रसिद्धमप्युपासनाख्यकर्मप्रतिपादकत्वात्कर्ममीमांसान्तर्गतमेव । तथा चतुरध्यायी शारीरकमीमांसा 'अथातो ब्रह्मजिज्ञासा' इत्यादि[7]रनावृत्तिः शब्दादित्यन्ता जीवब्रह्मैकत्वसाक्षात्कारहेतुः श्रवणाख्यविचारप्रतिपादकान्न्यायानुपदर्शयन्ती भगवता बादरायणेन कृता । तत्र सर्वेषामपि वेदान्तवाक्यानां साक्षात्परम्परया वा प्रत्यगभिन्नाऽद्वितीये ब्रह्मणि तात्पर्यमिति समन्वयः प्रथमाध्यायेन प्रदर्शितः । तत्र च प्रथमे पादे स्पष्टब्रह्मलि[8]ङ्गयुक्तानि वाक्यानि विचारितानि । द्वितीये त्वस्पष्ट[9]लिङ्गान्युपास्यब्रह्मविषयाणि । तृतीये पादेऽस्पष्ट ब्रह्मलि-

---

१ ख. वासिष्ठं । ग. वासिष्ठ° । वाशिष्ठ° । २ ख. वासिष्ठञ्जैगाख्यं । ३ ग. पराशरं । ४ ख. °क्तं ततो भागवतं परम् । ए° । ५ ख. निर्मितम् । ६ ग. °हार्यच° । ७ ख. °दिना । ८ ख. °लिङ्गायु° । ९ ख. °ष्ट ब्रह्मलि° ।

ङ्गानि प्रायशो ज्ञेयब्रह्मविषयाणि[1] । एवं पादत्रयेण वाक्यविचारः समापितः । चतुर्थपादे तु प्रधानविषयत्वेन संदिह्यमानान्यव्यक्ताजादिपदानि चिन्तितानि । एवं वेदान्तानामद्वये ब्रह्मणि सिद्धे समन्वये[2] तत्र संभावितस्मृतितर्कादिप्रयुक्तैस्तर्कैर्विरोधमाशङ्क्य[3] तत्परिहारः क्रियत इत्यविरोधो द्वितीयाध्यायेन दर्शितः । तत्राऽऽद्यपादे साङ्ख्ययोगकाणादादिस्मृतिभिः सांख्यादिप्रयुक्तैस्तर्कैश्च विरोधो वेदान्तसमन्वयस्य परिहृतः । द्वितीये पादे सांख्यादिमतानां दुष्टत्वं प्रतिपादितं स्वपक्षस्थापनपरपक्षनिवारणरूपपर्वद्वयात्मकत्वाद्विचारस्य[4] । तृतीये पादे महाभूतसृष्ट्यादिश्रुतीनां परस्परविरोधः पूर्वभागेण परिहृतः । उत्तरभागेण तु जीवविषयाणाम् । चतुर्थपादे, इन्द्रियविषयश्रुतीनां विरोधः परिहृतः[5] । तृतीयेऽध्याये साधननिरूपणम् । तत्र प्रथमे पादे जीवस्य परलोकगमनागमनानिरूपणेण वैराग्यं निरूपितम् । द्वितीये पादे पूर्वभागेण त्वंपदार्थः शोधितः । उत्तरभागेण तत्पदार्थः । तृतीये पादे निर्गुणे ब्रह्मणि नानाशाखापठितपुनरुक्तपदोपसंहारः कृतः । प्रसङ्गाच्च सगुणनिर्गुणविद्यासु शाखान्तरीयगुणोपसंहारानुपसंहारौ[6] निरूपितौ । चतुर्थे पादे निर्गुणब्रह्मविद्याया बहिरङ्गसाधनान्याश्रमयज्ञादीन्यन्तरङ्गसाधनानि शमदमनिदिध्यासनादीनि च निरूपितानि । चतुर्थेऽध्याये सगुणनिर्गुणविद्ययोः फलविशेषनिर्णयः कृतः । तत्र प्रथमे पादे श्रवणाद्यावृत्त्या निर्गुणं ब्रह्म साक्षात्कृत्य जीवतः पापपुण्यालेपलक्षणा जीवन्मुक्तिरभिहिता । द्वितीये पादे म्रियमाणस्योत्क्रान्तिप्रकारश्चिन्तितः । तृतीये पादे सगुणब्रह्मविदो मृतस्योत्तरमार्गोऽभिहितः । चतुर्थे पादे पूर्वभागेण निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तिरुक्ता । उत्तरभागेण सगुणब्रह्मविदो[7] ब्रह्मलोकस्थितिरुक्तेति । इदमेव सर्वशास्त्राणां मूर्धन्यम् । शास्त्रान्तरं सर्वमस्यैव शेषभूतमितीदमेव मुमुक्षुभिरादरणीयं श्रीशंकरभगवत्पादोदितप्रकारेणेति रहस्यम् ।

एवं धर्मशास्त्राणि मनुयाज्ञवल्क्यविष्णुयमाङ्गिरोवसिष्ठदक्षसंवर्तशातातपपराशरगौतमशङ्खलिखितहारीतापस्तम्बोशनोव्यासकात्यायनबृह-

१ ख. °णवि° । २ ग. °ह्म सामान्य° । ३ ख. °कैश्च विरोधो । ४ ग. °त्मकाद्वि° । ५ ख. °रोधपरिहारः तृ° । ६ ग. हारौ । ७ ख. °रं चस° । ८ ख. °क्षुणाऽऽद° ।

स्पतिदेवलनारदपैठीनसिप्रभृतिभिः कृतानि वर्णाश्रमधर्मविशेषाणां विभागेन प्रतिपादकानि। एवं व्यासकृतं महाभारतं वाल्मीकिकृतं रामायणं च धर्मशास्त्रे एवान्तर्भूतं स्वयमितिहासत्वेन प्रसिद्धम्। सांख्यादीनां धर्मशास्त्रान्तर्भावेऽपीह स्वशब्देनैव निर्देशात्पृथगेव संगतिर्वाच्या।

अथ वेदचतुष्टयस्य क्रमेण चत्वार उपवेदाः। तत्राऽऽयुर्वेदस्याष्टौ स्थानानि भवन्ति सूत्रं शारीरमैन्द्रियं चिकित्सा निदानं विमानं विकल्पः सिद्धिश्चेति। ब्रह्मप्रजापत्यश्विधन्वन्तरीन्द्रभरद्वाजात्रेयाग्निवेश्यादिभिरुपदिष्टश्चरकेण संक्षिप्तः। तत्रैव सुश्रुतेन पञ्चस्थानात्मकं प्रस्थानान्तरं कृतम्। एवं वाग्भटादिनाऽपि बहुधेति न शास्त्रभेदः। कामशास्त्रमप्यायुर्वेदान्तर्गतमेव। तत्रैव सुश्रुतेन वाजीकरणाख्यकामशास्त्राभिधानात्। तत्र वात्स्यायनेन पञ्चाध्यायात्मकं कामशास्त्रं प्रणीतम्। तस्य च विषयवैराग्यमेव प्रयोजनम्। शास्त्रोद्दीपितमार्गेणापि विषयभोगे दुःखमात्रपर्यवसानात्। चिकित्साशास्त्रस्य रोगतत्साधनरोगनिवृत्तितत्साधनज्ञानं प्रयोजनम्।

एवं धनुर्वेदः पादचतुष्टयात्मको विश्वामित्रप्रणीतः। तत्र प्रथमो दीक्षापादः। द्वितीयः संग्रहपादः। तृतीयः सिद्धिपादः। चतुर्थः प्रयोगपादः। तत्र प्रथमे पादे धनुर्लक्षणमधिकारिनिरूपणं च कृतम्। अत्र धनुःशब्दश्चापे रूढोऽपि धनुर्विधायुधे प्रवर्तते। तच्चतुर्विधम्—मुक्तममुक्तं मुक्तामुक्तं यन्त्रमुक्तम्। मुक्तं चक्रादि। अमुक्तं खड्गादि। मुक्तामुक्तं शल्यावान्तरभेदादि। यन्त्रमुक्तं शरादि। तत्र मुक्तमस्त्रमुच्यते। अमुक्तं शस्त्रमित्युच्यते। तदपि ब्राह्मवैष्णवपाशुपतप्राजापत्याग्नेयादिभेदादनेकविधम्। एवं साधिदैवतेषु समन्त्रकेषु चतुर्विधायुधेषु येषामधिकारः क्षत्रियकुमाराणां तदनुयायिनां च ते सर्वे चतुर्विधाः पदातिरथ गजतुरगारूढाः। दीक्षाभिषेकशकुनमङ्गलकरणादिकं च सर्वमपि प्रथमे पादे निरूपितम्। सर्वेषां शस्त्रविशेषाणामाचार्यस्य च लक्षणपूर्वकं संग्रहणप्रकारो दर्शितो द्वितीयपादे गुरुसंप्रदायसिद्धानां शस्त्रविशेषाणां पुनः पुनरभ्यासो मन्त्रदेवतासिद्धिकरणमपि निरूपितं

१ ख. स्त्रमध्य ए°। २ ख. °त्रंशारी°। ३ ख. °श्वप्रस्था°। ४ ख. °हुविशेषीति। ५ ख. °नंनि°। ६ ख. °धनं ज्ञानप्र°। ७ ख. °पि चतुर्वि°। ८ ख. °मुक्तं च मु°। ९ ग. शक्त्या वा°। १० ख. निरूपणम्। ११ ख. °नां शास्त्र°। १२ ग. नां पु°

तृतीयपादे । एवं देवतार्चनाभ्यासादिभिः सिद्धानामस्त्रविशेषाणां प्रयोगश्चतुर्थपादे निरूपितः । क्षत्रियाणां स्वधर्माचरणं युद्धं दु[2]ष्टस्य दण्डश्चोरादिभ्यः प्रजापालनं च धनुर्वेदस्य प्रयोजनम् । एवं च ब्रह्म[3]प्रजापत्यादिक्रमेण विश्वामित्रप्रणीतं धनु[4]र्वेदशास्त्रम् ।

एव गान्धर्ववेदशास्त्रं भगवता भरतेन प्रणीतम्[5] । गीतवाद्यनृत्यभेदेन बहुविधोऽर्थः । देवताराधननिर्विकल्पकसमाध्यादिसिद्धिश्च गान्धर्ववेदस्य प्रयोजनम् ।

एवमर्थशास्त्रं च बहुविधम् । नीतिशास्त्रमश्वशास्त्रं शिल्पशास्त्रं सूपकारशास्त्रं चतुःषष्टिकलाशास्त्रं चेति नानामुनिभिः प्रणीतं तत्सर्वमस्य च सर्वस्य लौकिकवत्प्रयोजनभेदो द्रष्टव्यः ।

एवमष्टादश विद्यास्त्रयीशब्देनोक्ताः । अन्यथा न्यूनताप्रसङ्गात् ।
तथा सांख्यशास्त्रं भगवता कपिलेन प्रणीतम् । अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थ इत्यादि षडध्यायम् । तत्र प्रथमेऽध्याये विषया निरूपिताः । द्वितीयेऽध्याये प्रधानकार्याणि । तृतीयेऽध्याये विषयेभ्यो वैराग्यम् । चतुर्थेऽध्याये विरक्तानां पिङ्गलाकुर्वादीनामाख्यायिकाः । पञ्चमेऽध्याये परपक्षानिर्णयः । षष्ठे सर्वार्थसंक्षेपः । प्रकृतिपुरुषविवेकज्ञानं सांख्यशास्त्रस्य प्रयोजनम् ।

तथा योगशास्त्रं भगवता पतञ्जलिना प्रणीतम् । अथ योगानुशासनमित्यादि पादचतुष्टयात्मकम् । तत्र प्रथमपादे चित्तवृत्तिनिरोधात्मकः समाधिरभ्यासवैराग्यरूपं च तत्साधनं निरूपितम् । द्वितीये पादे विक्षिप्तचित्तस्यापि समाधिसिद्ध्यर्थं यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टाङ्गानि निरूपितानि । तृतीये पादे [10]योगिविभूतयः । चतुर्थे पादे कैवल्यमिति । तस्य च विजातीयप्रत्ययानिरोधद्वारेण निदिध्यासनासिद्धिः प्रयोजनम् ।

तथा पशुपतिमतं पाशुपतं शास्त्रं[11] पशुपतिना पशुपाशविमोक्षणाय— अथातः पाशुपतं योगविधिं व्याख्यास्याम इत्यादि पञ्चाध्यायं विरचितम् । तत्राध्यायपञ्च[12]केनापि कार्यरूपो जीवः[13] पशुः कारणं पतिरीश्वरः । [14]योगः पशुपतौ चित्तसमाधानम् । विधिर्भस्मना त्रिषवणस्नानादिर्निरू-

१ ग. °णं दु° । २ ख. ग. °ष्टदस्युचोरा° । ३ ग. °ह्म प्रजा° । ४ क. धर्मशा° । ५ ख. °वंगन्ध° । ६ ख. °म् । तत्र गी° । ७ ख. °यीविद्याश° । ८ ख. ग. °ररादी° । ९ ख. °त्तनिवृत्तिनिरो° । १० ख. योगविकृत° । ११ ख. °स्त्रं भगवतापशुपति° । १२ ख. °केन का° । १३ ख. °वः का° । १४ ख. योगप° ।

पितः दुःखान्त[1]संज्ञो मोक्षश्च प्रयोजनम् । एत एव कार्यकारणयोगविधिदुःखान्ता इत्याख्यायन्ते ।

एवं वैष्णवं नारदादिभिः कृतं पञ्चरात्रम्[2] । तत्र वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाश्चत्वारः पदार्था निरूपिताः । भगवान्वासुदेवः सर्वकारणं परमेश्वरः । तस्मादुत्पद्यते संकर्षणाख्यो जीवः । तस्मान्मनः प्रद्युम्नस्तस्मादनिरुद्धोऽहंकारः । सर्वे चैते भगवतो वासुदेवस्यैवांशभूताः । तदभिन्ना एवेति भगवतो वासुदेवस्य मनोवाक्कायवृत्तिभिराराधनं कृत्वा कृतकृत्यो भवतीत्यादि च निरूपितम् ।

तदेवं दर्शितः प्रस्थानभेदः । सर्वेषां च संक्षेपेण त्रिविध एव प्रस्थानभेदः । तत्राऽऽरम्भवाद एकः । परिणामवादो द्वितीयः । विवर्तवादस्तृतीयः । पार्थिवाप्यतैजसवायवीयाश्चतुर्विधाः परमाणवो द्व्यणुकादिक्रमेण ब्रह्माण्डपर्यन्तं जगदारभन्ते । असदेव कार्यं कारकव्यापारादुत्पद्यत इति प्रथमस्तार्किकाणां, मीमांसकानां च सत्त्वरजस्तमोगुणात्मकं प्रधानमेव महदहंकारादिक्रमेण जगदाकारेण परिणमते । पूर्वमपि सूक्ष्मरूपेण सदेव कार्यं कारणव्यापारेणाभिव्यज्यत इति द्वितीयः पक्षः सांख्ययोगपातञ्जलपाशुपतानाम् । ब्रह्मणः परिणामो[3] जगदिति वैष्णवानाम्[4] । स्वप्रकाशपरमानन्दाद्वितीयं ब्रह्म स्वमायावशान्मिथ्यैव जगदाकारेण कल्पत इति तृतीयः पक्षो ब्रह्मवादिनाम् । सर्वेषां प्रस्थानकर्तॄणां मुनीनां विवर्तवादपर्यवसानेनाद्वितीये परमेश्वर एव प्रतिपाद्ये तात्पर्यम् । न हि ते मुनयो भ्रान्ताः सर्वज्ञत्वात्तेषाम् । किं तु बहिर्विषयप्रवणानापाततः पुरुषार्थे प्रवेशो न संभवतीति नास्तिक्यवारणाय तैः प्रकारभेदाः प्रदर्शिताः । तत्र तेषां तात्पर्यमबुद्ध्वा वेदविरुद्धेऽप्यर्थे[5] तात्पर्यमुत्प्रेक्ष्यमाणास्तन्मतमेवोपादेयत्वेन गृह्णन्तो जना नानापथजुषो भवन्तीति सर्वमनवद्यम् ॥

इति श्रीमधुसूदनसरस्वतीविरचितः प्रस्थानभेदः समाप्तः ॥

---

१ ग. न्तरसं° । २ ख. पाञ्चरात्रम् । ३ ग. णामीज° । ४ ख. °मू । मायावच्छिन्नब्रह्मपरिणामो जगदिति शाक्तानां स्त्र° । ५ ख. °र्थे तेषां ता° ।

# अथ सर्वदर्शनसंग्रहान्तर्गतश्रुतिस्मृतिविशेषवाक्याद्यवर्णानुक्रमः ।

श्लोकाद्याः — पृष्ठाङ्काः

